97B, इति प्रवायनपक्षे गार्हपत्यानुगमने प्रायश्चित्तम्, 112B, अथ हविर्दोष-प्रायश्चित्तम्, 115B, अथ प्रमत्तप्रयोगक्रम, 116A, अथ अन्यद्रव्यस्य स्कन्दने पयसोऽन्यद्रव्यस्य च विस्कन्दने प्रायश्चित्तम्, 117B, अथ अग्निहोत्रद्रव्यमधिश्रुत यदि प्रस्कन्देत् तदा प्रायश्चित्त, 118B, अथ केशादिभिर्दुष्टो प्रायश्चित्तम्, 119B, इति भिदष्टप्रायश्चित्तम्, अथ योऽसावनुगतिप्रायश्चित्तम्, 120A, अथ उत्तराऊ व्यर्थहविस्कन्दनादो प्रायश्चित्तम्, 121A, इति स्कन्नप्रायश्चित्तम्, 124A,, इति वह्नीना एकदेशापहारे सर्वप्रायश्चित्तम्, अथ अग्निवह्निप्यात्तप्रायश्चित्तम्, 125A, अथ होमकालातिपत्तिप्रायश्चित्तम्, 130A, इति कालातिपत्तिप्राय श्चित्तम्, अथ अग्निहोत्रसमास, 131A, अग्निसमारोप, 131B, इत्यरणि-समारोप-पाणिसमारोपयो प्रायश्चित्तम्, अथ समारूढेषु अरणिनाशे प्राय-श्चित्तम्, 135B, अथ अनुपोद्घातप्रायश्चित्तम्, 141B, अथैराभद्रयोतर वान्तौ प्रायश्चित्तम्, इत्यापस्तम्बीय प्रायश्चित्तम्।

The later authorities quoted —

3A, कारिकाया, 4B, केशव, 5B, रुद्रदत्त, 6A, धूर्त्तस्वामिव्याख्या and वेङ्कटेश, 6B, रामाण्डार, निदान सूत्रम्, 7A, त्रिकाण्डमण्डन, 8A, गोपाल, 10B, हविर्हकारिका, 11A, बौधायन and आश्वलायन, 13A, प्रायश्चित्तप्रदीप, 13B, अजस्रपटलम्, 14A, देवत्रात, 14B, सिद्धान्तभाष्य, 15A, सिद्धान्तवृत्तिकृत्, 15B, आश्वलायनकारिका, 17A, पराशरमाधव, 18A, कर्मान्तसूत्र, 19A, चन्द्रिकाकार, 20A, श्रौतालोक, 21A, प्रायश्चित्त चन्द्रिका, 28A, विद्यारण्य, 37A, प्रायश्चित्तप्रदीपिका, 38B, प्रयोग पारिजात, 55A, यजनीयसूत्रोक्तपरिभाषा and आश्वलायनीय परिभाषा, 60A, सग्रह (तैलग-कर्णाट कलिङ्ग-वङ्गसम्बन्धिनो मातुलियाश्च विप्रा। श्राद्धे विवाहे खलु यज्ञपाके, न पूजनीया अपि धर्मतुल्या ) and हेमाद्रि, 63A, स्मृत्यर्थसार, 64A, पारिजात, स्मृतिसार, 67A, भारद्वाजगृह्ये, व्याप्रवचसि, 67B, प्रायश्चित्तप्रश्न, 80A, षट्त्रिंशन्मते, 81A, शूलपाणि, 85B, यज्ञ-पार्श्व, 88A, प्रयोगपारिजातपरिशिष्टे, 103B, इति गुरुचरणा, 104A, इति देवयाज्ञिका, 104B, धूर्त्तस्वामीकार, 107A, स्मृतिचन्द्रिका, 108B, विज्ञानेश्वर, 122A, देवत्रात, 124B, रुद्रदत्त, 134A, आश्वलायन-परिशिष्ट, 141B, इत्याधानदीपिकायाम्।

## 660.

**1052. द्वितीयश्येनसुल्वोपाधानमन्त्रोपाधानप्रकाशः ।**

*Dvitiya Syena Sulvopadhānamantropadhānaprakāśa.*

*By Rāya Bhatta, son of Viśveśvara Bhatta, by the daughter of Kamalākara.*

Substance, country made paper 9¾ × 4¼ inches Folia, 23 Lines, 11 on a page Extent in slokas, 600 Character, Nāgara Date Sam 1752 Appearance, old Complete

This refers to Āpastamba's sulvopādhāna chapter and is based on a Śyenopādhāna Kārikā, complete in 5 chapters.

It often quotes Karavinda Svāmin and Sundararāja

*Beginning*:— श्रीसरस्वत्यै नमः ।

विश्वेशौ पितरौ नत्वा भट्टान् मातामहानपि ।
रायभट्टेन विदुषा श्येनचिद्व्याख्यतेऽधुना ॥

अथातो व्याख्यास्यामः । अनेकविधः प्रथमोऽग्निरितिसूत्रादेकविध एव प्राकृतस्तं कृत्वा तद्विकृतिभूतान् द्विविधत्रिविधादीन् शतविधपर्यन्तान् कुर्यादित्युक्ता । तद् ह वै सप्तविधमेव चिन्वीत । सप्तविधो वा व प्राकृतोऽग्निरिति ।

*It ends*:—

एतन्मते अग्निर्मूर्द्धेत्यादिपञ्चानामुपधानं नास्ति तत्स्थितो हिरण्यं निधाय इत्यादि धामच्छन्दान्तं समाप्तं ।

इति कारिकाकारमतेन मन्त्रोपाधाने प्रथमः प्रकाशः समाप्तः ॥

... ... ... ... ... ... ...

विदुषा रायभट्टेन भट्टवीरेशसूनुना ।
योऽत्र श्रमः कृतस्तेन प्रीयतां त्रिपुरान्तकः ।

*Col.*—स्वस्ति श्रीमत्पदवाक्यप्रमाणपारावारीणविद्वन्मुकुटहीरायमाणमीमांसककमलाकरभट्टानां दुहितृसुतेन काशीस्थपनामकवीरेश्वरभट्टात्मजेन रायभट्टेन कृतौ द्वितीयश्येनस्य सुल्वोपाधानमन्त्रोपधानप्रकाशः समाप्तः । श्री ।

*Post Col.*—संवत् १७५२ । श्रीरामजी सहायः ।

## 661.

30 (आपस्तम्बीय) दर्शपूर्णमासः । (*Āpastambīya*) *Darśapūrṇamāsa.*

Substance, country-made paper 10×5 inches Folia, 61. Lines, 9 on a page Extent in ślokas, 730 Character, Nagara Appearance, fair. Complete

It treats of the rites to be performed on the new and full moon days, according to Āpastamba

*Colophon*:—इति आपस्तम्बशाखाया दर्शपूर्णमासौ समाप्तौ ।

*Beginning*:—श्रीगणेशाय नमः ।

अथातो दर्शपूर्णमासौ व्याख्यास्यामः । प्रातः अग्निहोत्रं हुत्वा दर्भेष्वासीनः दर्भान् धारयमाणः पवित्रपाणिः पलाश सह प्राणा- नायम्य दर्शेन यक्ष्ये पूर्णमासेन यक्ष्ये इति सङ्कल्प्य विद्युदसि विद्यमे पाप्मानं ऋतात् सत्यमुपैमि । इत्यादि ।

*End*:—भूः स्वाहा भुवः स्वाहा सुवः स्वाहा भूर्भुवः सुवः स्वाहा ।

## 662.

463. *The Same*

Substance, country-made paper 10½×4½ inches Folia, 40 Lines, 10 on a page Extent in ślokas, 900 Character, Nagara Appearance, old Complete.

*Beginning*:—श्रीगणेशाय नम. ।

ॐ अथातो दर्शपूर्णमासौ व्याख्यास्याम. । प्रातरग्निहोत्र हुत्वा दर्भेष्वासीनः दर्भान् धारयमाणः पवित्रपाणिः पलाश सह प्राणा- नायम्य, etc., etc.

*End*:—यानि तेयामग्रेयाणां छायाशुभ्रतरं परम् ।
नमस्ते गार्हपत्याय नमस्ते दक्षिणाग्नये ॥
नम आहवनीयाय महावेद्यै नमोनमः ।

*Col.*:—इति दर्शपूर्णमासप्रयोगः ।
शुभमस्तु ।

On the reverse side of the last leaf there are 15 verses on Vihārapramāṇa, after which we have —विहारनिर्माण कर्तु निर्विघ्नतासिद्ध्यै गणपतिपूजनपूर्वकंविश्वकर्मण पूजन च करिष्ये। गणपति सम्पूज्य विश्वकर्मणे नम इति मन्त्र पठन्तो पूजन कुर्यात।

On the obverse of the first leaf

इद दर्शपूर्णमासपुस्तक मोति नरसिंह महाराज दामोदरस्य। शुभ भूयात लेखकपाठकयो शुभम्॥

In leaf 7B पितृपितृयज्ञ।

" " 10A अथ देवादेवेषु नम॥ श्रीगणेशे गुरवे नम॥ उदिते आदित्ये पौर्णमास्यास्तन्त्र प्रक्रमयति।

In leaf 15B प्रथम प्रश्न।

## 663.

### 2112 *The Same*

### *Of the Apastamba School*

Substance country made paper 9½×4 inches Folia 40 Lines 11 on a page Character Nagara of the eighteenth century Appearance discoloured Incomplete

*It begins* —

अथातो दर्शपूर्णमासौ व्याख्यास्याम। प्रातरग्निहोत्र कृत्वा दर्भेष्वासीनो दर्भान् धारयमाण etc, etc

It differs from L No 1331 and CS No 429 by Ananta

## 664

### 149 *The Same*

For the work see L 754

Substance country made paper 8½×4 inches Folia, 63 Lines 9 10 on a page Extent 900 sloka Character Nagara Appearance old Complete

*The Colophon says* —इत्यापस्तम्बशाखाया दर्शपौर्णमासौ समाप्तौ।

665.

3114 दर्शपूर्णमासपद्धतिः ( आपस्तम्ब )।

*Darśapurṇamāsapaddhati.*

Substance, country-made paper 8 × 3½ inches Folia, 51 Lines, 8 to 11 on a page Extent in ślokas, 400 Character, Nāgara of the eighteenth century. Appearance, discoloured Complete

*It begins*:—

अथातो दर्शपूर्णमासौ व्याख्यास्यामः ।

प्रातरग्निहोत्रं हुत्वा दर्भेष्वासीनो दर्भान् धारयमाणः . . . .

. . . . दर्शेन यक्ष्ये पूर्णमासेन यक्ष्ये इति संकल्प्य ततो वपनं

कृत्वा ॥ विद्युदसि विद्यमे पाप्मानमृतात् सत्यमुपैमि ॥ . . . .

अस्यां पौर्णमासेष्ट्या अध्वर्युं त्वां वृणीमहे । . . . . . . . .

एवं ब्रह्माणं होतारमग्नीध्रं च ॥ इत्यादि

No Colophon.

666.

429 दर्शपूर्णमासेष्टिप्रयोगः । *Darśapurṇamāseṣṭi-prayoga.*

For the MS. see L. 1886.

The MS. is in two different hands, the first twenty-six leaves being in a bold Devanāgara and the rest in a hand

The first sūtra quoted is that of Āpastamba.

667.

186. दर्शपूर्णमासप्रयोगः । *Darśapurṇamāsaprayoga.*

For the manuscript see L. 1881

It quotes Ap. Sū. Pr. I. 1. अथातोदर्शपौर्णमासौ व्याख्यास्यामः ।

668.

2205. पञ्चप्रयोगी । *Pañcaprayogī.*

Substance, country made paper 8½ × 4 inches Folia, 16 Lines, 9 on a page Extent in ślokas 200 Character, Nāgara Appearance, discoloured

*It begins* —

> श्रीगणेशाय नमः। याजमानं व्याख्यास्यामः। यजमानस्य ब्रह्म-
> चर्यं दक्षिणादानं सत्यप्रकल्पनं कामानां कामेन प्रजापतिरियो
> मन्त्रान् जपति। अकरणमनुप्रतिष्ठतेऽनुमन्त्रयते॥

(These are the first three sūtras of the 4th Praśna of the Āpastamba Śrauta sūtra)

अथ दर्शपूर्णमासयोः शुचिः शुक्लवाससा दर्भेष्वासीनो दर्भान् धारयमाणः पवित्रपाणिः पत्न्या सह प्राणानायम्य अद्येत्यादिकालादिसंकीर्तनानन्तरं पौर्ण-मासेन यक्ष्ये दर्शेन यक्ष्ये इति संकल्प्य कक्षश्मश्रूणि वापयेत्। उपकक्षावधेऽथ श्मश्रूण्यथ केशान्। अपि वा श्मश्रूण्युपकक्षावथ केशान् अत्र वपनं कृत्वा स्नानादि विधाय विद्युदसि विद्य मे पाप्मानमनृतात् सत्यमुपैमि। यक्ष्यमाणोऽपः स्पृशति तदिदं सर्वंयज्ञेष्वपः स्पर्शनं भवति। अथाध्वर्युवरणम्। अस्मिन् दर्शपौर्णमासाख्ये कर्मणि अध्वर्युं त्वामहं वृणे। अध्वर्युर्वृतोऽस्मि कर्म करिष्यामि। तूष्णीमविध्यायन् विहारस्योत्तरतः प्राङ्मुख उपविश्य देवागारुविदोगातु यज्ञाय विन्दत मन-सस्पतिना देवेन वाताद्यज्ञः प्रयुज्यतामिति जपित्वा अध्वर्यु ममाप्ये वर्चो विष्वे-स्तु। इत्यादि।

The work is called Pañcaprayogī on the obverse of the first leaf and the word पंच occurs on the right hand corner of every leaf. But it contains only the Yajamānaprayoga, that is, the duties of a yajamāna or a sacrificer in the Darśa Paurṇamāsa.

## 669

### 181 याजमानम्। *Yājamāna*

*For this manuscript see L 1337*

The sūtras quoted in the beginning belong to the Āpastamba Śrauta sūtra (IV 1—7). The last sūtra (namely the 7th) quotes Vājasaneyaka as an authority.

## 670.

### 2737. आपस्तम्ब याजमानम् । *Āpastambayājamāna.*

Substance, country-made paper. 9¼ × 4¼ inches Folia, 6 Lines, 12 on a page. Character, Nāgara of the nineteenth century Appearance, fresh Incomplete

*It begins* :—

आपस्तम्बयाजमानम् ।

प्रातरग्निहोत्रं कृत्वा दर्भेष्वासीनो दर्भान् धारयमाणः पवित्रपाणिः . . . . . . . . दर्शेन यक्ष्ये पौर्णमासेन वा यक्ष्य इति वा संकल्प्य । विद्युदसि विद्य मे पाप्मानं ॥ इत्यादि इत्यादि ।

## 671.

### 2730. प्रवसद्याजमानम् । *Pravasadyājamāna.*

Substance, country-made paper 9¼ × 4 inches Folia, 2 Lines, 11 on a page. Extent in ślokas, 35 Character, Nāgara of the eighteenth century. Appearance, discoloured.

On the duties of a yajamāna (Fire-worshipper) when living abroad.

*It begins* :—

अथ प्रवसद्याजमानम् ।

तथाचापस्तम्बसूत्रम् ।

प्रवसन् काले विहाराभिमुखो याजमानं जपति प्राञ्चो वि + + + + मति प्रागुदेत्य गोमती जपति जपति ॥

अथ प्रयोगः ॥ तत्र यजमानोऽग्नियुक्तग्रामाद्ग्रामान्तरे वसन्नौपवसथ्येऽहनि यजनीये च कृतनित्यक्रियः औपवसथ्येऽहनि कृतसकलकेशः कृतशौचो यस्यां दिश्यग्नयो भवन्ति तां दिशमभिमुखो यतवाग् याजमानं मन्त्रजपं करिष्ये याजमानमिति वेति संकल्प्य विद्युदादिदध्युन्तं । etc., etc.

*End* :—यजमाना याजमानं चेत् पत्नीकर्म च लुप्यते ।

नताप्रतु + + + + स्यादपर्व्वणग्रहणः (?) ॥

यत्रापि याजमान पूर्वैर्व्याख्येय ॥ अत्र यद्यपि विध्याक्रम-सदृशानां कर्मणां विद्वारसमुप्रक्तत्व दृश्यते ॥ तथापि न तेषा विद्वारसस्का[रि]त्व ॥ अर्थवादात् ॥ मन्त्रलिङ्गाच ॥ अन्ये तु, पुत्रयाधानि यजमान कुर्यादित्याह ॥

## 672

### 148 आधानप्रयोगः (आपस्तम्बशाखीयः)।

*Adhānaprayoga*

For the MS see L 1365

It is dated Sam 1742

The word 'Apastamba Sākhiya" is given along with the title of the book in the Colophon

*Post Col* —इति रामार्पण मस्तु ।

संवत् १७४२

शुक्रे मासे सिते पक्षे द्वादश्यां शिववासरे ।

सदाशिवेन लिखितं आधानस्य च पुस्तकम् ॥

यमखगेन्दुतुल्ये च वैजनाथेन मोनिना ।

दत्त्वा मौल्यं गृहीतोऽयं संवत् श ददतु स्फुटम ॥ १८६० ।

The obverse of the first leaf and the reverse of the last are full of writing

## 673.

### 2338 *The Same*

Substance country made paper 10 × 4 inches Leaves 11 Lines on a page 10 Extent 500 slokas Character Nagari of the seventeenth century Appearance discoloured old crumbling at the edges The leaves are full of marginal notes in different hands and the Mantras are all accented

For the work see L 1365 At the left hand upper corner of leaves, आधा प्रयो आपा ।

In leaf 9A, इति पवमानेष्टिः। See Bibl. Ind. Edition of Āpastamba from 232 to 288. In 9A commences Darśapūrṇamāsa-Sārasvatahoma.

## 674.

516 आधानप्रयोगः (आपस्तम्बशाखीयः)।

*Ādhānaprayoga.*

For this manuscript see L. 1304.

It is not incomplete at the end, as Rājendralāla says.

It ends thus in 16A :—

उपांशुप्रचारः मार्ज्जनान्ते आग्नेयादीनां चतुर्धा चतुर्धाकरणं कृत्वा वर्हिषदं करोति। ततोऽदितिं ब्रह्मणे परिहरति भक्षयन्ति। अथ पित्र्येष्ट्यादि पवमानेष्टिवत् सन्तिष्ठते।

*Col.*—इत्याधानं समाप्तम्।

श्रीश्रीदुर्गायैनमस्तु।

Then follow 16 lines about the observance of the Ajasra ceremony.

It quotes from Rāmāndāra in leaf 16B. and begins अथ आपस्तम्बाधान प्रयोगः।

## 675.

2021. आधानविधिः। *Ādhānavidhi from Śrauta tantra.*

Substance, country made paper 9×4½ inches Folia, 15 Lines, 10, 12 on a page Extent in ślokas, 350 Character, Nagara of the seventeenth century. Appearance, discoloured and fragile

*Beginning*:—

अथ अग्न्याधेयं व्याख्यास्याम (The first sūttra of the 5th Praśna of Āpastamba)

श्रुताध्ययनसम्पन्नः सामचारित्रोऽन्यूनातिरिक्ताङ्गो ब्राह्मणो विदुषा ब्राह्मणेन यजेत।

*End*:—आधानं त्रिविधं अग्निहोत्रं इष्टे पूर्व्वं(?) सोमपूर्व्वं वामावास्याधाने नक्षत्राधाने वाजसविधिः। नात्र कात्यायनाश्वलायनौ तु

सर्वत्र द्वादशाहमन्त्रमिच्छत । अजस्रमध्ये पौर्णमासी यदि प्राप्ता स्याचदा अजस्रा परित्यज्याग्नीन् पुनर्विवक्षारतादि वर्जेत (?) ।

*Col* —इति श्रीश्रौततन्त्रे आधानविधि समाप्त ॥

## 676

### 2729. आपस्तम्बानामाग्रयणकर्म ।

*Agrayanakarma according to Apastamba*

Substance country made paper $10\frac{3}{4}\times4\frac{1}{4}$ inches Fol s 2 Lines 15 on a page Character Nāgara Appearance fresh

*It begins* —

अथापस्तम्बानामाग्रयणकर्मोच्यते ।

दर्भेष्वासीनो दर्भान् धारयमाण पवित्र कृत्व प्राणानायम्य देशकालौ सङ्कीर्त्य श्रीपरमे॰श्व श्यामाकाग्रयण समानतन्त्र पूर्व श्रीह्याग्रयणेन यक्ष्ये इति सङ्कल्प्य + + स्वस्वकाले ऋत्विग्वरणादि ।

The second leaf contains 4 lines only

*It ends* — इति श्यामाकयवसमानभागाग्रायनमन्त्र । विश्वान्मामादियज्ञो बभूवेति जप । यवस्य पुनराधानकालात् । यव + यमवन् स्वतिष्ठत आग्रयणम् ।

The MS does not seem to be complete

## 677.

### 10629 आग्रयणप्रयोग । *Agrayanaprayoga*

*By Visvesvara Bhatta, son of Lahi Bhatta (of the school of Apastamba)*

Substance country made paper $8\frac{1}{4}\times4$ inches Fol s 17 Lines 7 on a page Extent n slokas 400 Character Nāgara of the eighteenth century Appearance old and worm eaten Complete

*Beginning* — श्रीगणेशाय नमः ॥

आग्रयणप्रयोगो लिख्यते । तत्राग्रयण नावनिविध यवश्यामाकव्रीहिभेदात् । तत्र यवाग्रयण वसन्ते कश्चिदिच्छ पर्वणि ॥ अथवा वसन्ते शुक्लपक्षान्निर्मतरेवनक्षत्रेषु रेवत्या वा कार्य ।

2A. अपि वा पौर्णमास्यामाग्रयणमिष्टिमन्वायातयेदित्यापस्तम्बसूत्रात् पौर्णमासाग्रयणयोः समानतन्त्रत्वाकरणपक्षे प्रथममाग्नेयमष्टाकपालं निर्वपति॥ पुराणानां व्रीहीणामिति सूत्रेणावगताग्रयणागभावानेय-निर्वापपूर्वकमाग्रयणदेवताभ्यो निरूप्य पश्चादग्न्यादिप्रकृतिदेवता-निर्वाप इत्येवं प्रकारेण तन्त्रेण प्रयोगः (2B.) . . . . . . .

इति तदनुयायिनः। विद्यारण्याखिलाकारैः तु दर्शेष्याग्रयणं भवति

4A. इत्याग्रयणोपयुक्तकालादिनिर्णयः। अथ प्रयोगक्रमः॥

*Post Colophon* :— इति श्रीविश्वेश्वरचरणकमलभजनैकचित्तमद्दामान्य-लाष्टिभट्टाङ्गजवीरेश्वरभट्टविरचिते आग्रयणप्रयोग(गा) सनिर्णय-समाप्तः।

There are four lines after the colophon, containing an extract from Rudradatta.

## 678.

### 503. चातुर्मास्यप्रयोगः। *Cāturmāsyaprayoga.*

For the MS. see L. 1315.

*Post Col.*:—संवत् १७५९ समये ज्येष्ठशुद्ध अष्टमि तदिने पक्षत्ति समाप्ति। लिखितं माधवकिङ्कर। शुभमस्तु।

This belongs to the Āpastamba School of the Black Yajurveda for the final sūtra quoted in the MS. belongs to Apastamba.

Praśna VIII of the Āpastamba Śrauta Sūttra deals with Cāturmāsya.

## 679.

### 1032. *The Same*

Substance, country-made paper $9\frac{3}{4} \times 4\frac{1}{4}$ inches Folia, 26 Lines, 12 on a page. Character, Nāgarī. Appearance, old Complete.

*Post Colophon Statement* :—

संवत् १८ समये आश्विने मासि विजयादशम्यां भानौ काश्यां रामचन्द्रस्य ठुण्ढिराजेन लिखितं॥

शुभम् भवतु।

## 680.

2022. *The Same.*

Substance, country made paper 9¼×4½ inches. Folia, 24. Lines, 13 to 15 on a page. Extent in ślokas, 1000 Character, Nāgara of the eighteenth century. Complete

*Beginning*:—

अथ चातुर्मास्यानां प्रयोग उच्यते। फाल्गुन्या चैत्र्यां वा वैश्वदेवेन यजेत तयोः पूर्वस्यां चतुर्दश्यां प्रातरग्निहोत्रं कृत्वा पत्न्या सह प्राणानायम्य एवं गुणविशेषणविशिष्टायां पुण्यतिथौ चातुर्मास्या-न्यारप्स्ये इति संकल्प्य पुनः प्राणानायम्य तिथ्यादि संकीर्त्य यथा-प्रयोगमाश्रित्य ऐष्टिकं चातुर्मास्यैर्यक्ष्ये इति संकल्प्य अरण्योरात्मनि वा समारोप्य प्राचीनप्रवणं देवयजनं गत्वा आयतनानि कृत्वा मथित्वा लौकिके वा उपावरोह्य विह्रुदसीत्यप उपस्पृश्य ऐष्टिक-चातुर्मास्ययागे अध्वर्युं त्वामहं वृणे।

*Colophon*:—समाप्तानि चातुर्मास्यानि।

*Post Col.*:—काशीभट्टकविमयह्नस्य पुस्तकमिदम्।

## 681.

3294A चातुर्मास्य प्रयोगः or द्रोण-प्रयोगः।

*Cāturmāsyaprayoga or Droṇaprayoga.*

*By Gadādhara.*

Substance, country-made paper. 9×4½ inches Folia, 4 Lines, 11 to 14 on a page *Extent in Ślokas, 70 Character, Nagara. Appearance, dis-*coloured Complete

The date of the manuscript: सं १८६६ आषा॰ शु १५ गणेश-भट्टयाभेन लिखितम्॥

*It begins*:—

गुरुं चिन्तामणिं नत्वा चातुर्मास्यैकपाशुकम्।
गदाधरो मोक्षनामा प्रयोगं तु करोत्यथ॥
देवयाज्ञिकमतानुसारेण आपस्तम्बानामैकाग्निकपाशुकचातु-र्मास्यप्रयोगो लिख्यते।

A comprehensive manual on Agnicayana or Construction of Fire Altars, etc., based on Āpastamba Srauta ritual (16th and 17th Prasnas).

*Beginning*:— श्रीगणेशाय नमः ।

अग्निं चेष्यमाणोऽमावास्यायां पौर्णमास्यामेकाष्टकायां वोखां संभरति । अहर्दीक्षापक्षे उखासंभरणप्रभृत्यग्निचयपर्यन्तकर्म्माणि वसन्ते यथा भविष्यन्ति ।

*It ends*:—

अग्निं चित्वानन्तरे पर्व्वणि सौत्रामण्या यजेत । अपरेद्युः मैत्रावरुण्या चामिक्षयाः ।

*Col* —इति श्रीसाम्बशिवप्रसादात् चयनयोगः समाप्तः ॥

*Post Col.* —संवत् १६४७ समये कार्त्तिक वदि दशमी सोमवार ॥

## 686.

## 1057.

Substance, country-made paper 10¾×4 inches Folia, 13 Lines, 11 on a page Extent in ślokas, 300 Character, Nagara Appearance, old Fragment

This fragmentary codex comprises only one form of Vājapeya known as Āpta-Vājapeya. This manual follows the authority of Kapardisvāmin, on Prasnas 18 and 19 of Āpastamba.

*Beginning* — श्रीगणेशाय नमः ।

कपर्द्दिस्वामिभाष्यानुसारेण वाजपेयमारभ्य विश्वसृजामयनपर्य्यन्तानां कर्म्मणां प्रयोगः उच्यते । वाजपेयो द्विप्रकारः । आप्तवाजपेयः क्रतुवाजपेयश्च । आस्मिन् क्रतौ नास्ति चयनं प्रतिषेधात् । परिभाषायां केचित् अत्रापि इच्छन्ति । छन्दोगमतात्चयनं कार्य्यं । ज्योतिष्टोमस्य संस्थाभूतो वाजपेयोपीति छन्दोग उक्तम् । आपस्तम्बेन क्रत्वन्तरवाजपेय उक्त । क्रत्वन्तरवाजपेयश्च द्विप्रकारः अत्र आप्तवाजपेयः प्रथममुच्यते ।

*It ends* —

सन्तिष्ठते वाजपेय । तेनेष्ट्वा सौत्रामण्या यजेत । मैत्रावरुण्या वामिक्षया । प्रत्यवरोहणं यदि करोति तदा बृहस्पतिसवेन यजेत । श्वेतछत्रीच भवतीति विज्ञायते ।

*Col* —आसवाजपेयः समाप्तः ।

Then follow three lines

*Beginning* —अथक्रतुवाजपेयस्य कर्त्ता इत्यादि ।

Thus another form of Vajapeya known as Kratu-Vājapeya is simply touched and the MS breaks off abruptly

## 687.

2316 इष्टिप्रयोग । *Iṣṭiprayoga*

Substance country made paper $9\frac{1}{2}\times 4$ inches Folia 14 Lines 9 on a page Extent in Ślokas 228 as given at the end of the work Character Nāgara Appearance discoloured

It contains directions for the performance of certain isti rites, as dealt with in the 19th praśna of Āpastamba's Kalpasuttra

*Beg* — अथाधानेष्टीत्रम्

तत्र प्रथमायामग्निरग्नि[ ] पवमान । पौर्णमास तन्त्र॰ आज्यभागावाग्नि॰ अग्नि आ इ वह । इत्यादि ।

2A दद द॰ सिद्धमिष्टि ॥ द्वितीयस्या दधन्वतावाज्यभागौ अग्नि पावकम् ।

2B सिद्धमिष्टि ।

आश्वलायनस्त्वग्निरेषा । तत्रैव विकल्प ।

आद्योत्तमे चैव स्याता ॥ आद्यायामिष्टौ द्वितीयस्या इष्टे देवताद्वयस्य प्रक्षेप । पावकस्य शुचे तेन अग्निमपि पवमानमपि पावकमपि शुचिमेता प्रधानदेवता ।

4A इयमिष्टिर्विकल्पेन आपस्तम्बे क्रियते चेत्तदा उभाग्वेव प्रचार इत्याश्वलायनपक्ष उक्त ।

4A अथेष्टिरायस्त्वोक्ता ।

तासामुच्चैरेव प्रचार । प्रथमायां । अग्निरग्नि पवमानोऽग्नि पावकोग्नि शुचि । इत्यादि ।

5A. इतोऽग्निपक्ष उक्तः ।

,, अथ वैकल्पिक इष्टिप्रथमपक्ष उच्यते । प्रथमायामग्निदैवत्या पंचदश सामिधेन्यः । इत्यादि ।

6B. इत्युपांशुपक्षे त्रिविधा सिद्धमिष्टिः । इत्यन्वारंभणीया ।

7A. अथ पुनराधेयेष्टिस्तस्याः पूर्वमुत्सर्गेष्टिः आपस्तम्बेन भगवतोक्ता नाश्वलायनेन । तस्या देवता अग्निरग्निर्वैश्वानरो राष्ट्रोऽग्निपथुमान् मित्र इति ।

8A. इत्युत्सर्गेष्टिः । अथ पुनराधेयस्य प्रयोगः ।

9B. अथ आग्रयणेष्टिः ।

11B. इत्याग्रयणम् । अथ श्रमाख्ये पवित्रेष्टिरनाम्नातत्वात् बौधायनोक्ता लिख्यते या सर्वपापोपघाताय ।

> वैश्वानरो वारुणपशौ पवित्रेष्टिं तथैव च ।
> ऋतावृतौ प्रयुञ्जानः पुनाति दशपूरुषम् ।

इति यज्ञगाथा ।

*It ends with the col.:—*

11B. इति बौधायनप्रायोक्ता पवित्रेष्टिः ।

*Post Col.:*—ग्रन्थसंख्या २२७ ।

As Agnyādhāna is necessary in iṣṭi rites, it gives the duties of the hotṛ priest from Āsvalāyana. As Pavitresti is not in Āpastamba, it is taken from Baudhāyana.

## 688.

2313. तृचपद्धति । *Tṛcapaddhati.*

For the MS. and the work see L. 3222.

A manual for the recitation of the Trc, the initial words of which are उदुत्य, for the propitiation of the Sun. The Trc is to be found in p. 225 Vol. I. of Dr. Richard Garbe's edition of the Āpastamba Srauta Sūttra.

## 689.

3008. काम्ययागप्रयोग or त्रैधातवीय प्रयोगः ।

*Kāmyayāgoprayoga or Traidhātavīya-prayoga.*

For the manuscript and the work see L. 4142.

The author and his antecedents and the date of the composition of the work given at the end —

श्रीलक्ष्मीनृसिंहो जगदेकनाथ ॥
शाकेऽब्धियुग्म षट् चन्द्र मितेऽब्दे पार्थिवे तथा ।
इषस्य कृष्णपूर्णायां श्रीनृसिंहप्रसादत ॥
गोदावर्य्युत्तरे तीरे प्रतिष्ठानपुरे शुभे ।
भारद्वाजकुलोत्पन्ननारायणसुतेन वै ॥
रुद्रदेवेन विदुषा पद्धतीना श्रुत तथा ।
सूत्र सूत्रान्तरव्याख्यानिबद्धाश्च यथामति ॥
शिष्टाचार तथा दृष्ट्वा कृत्वा वै सद्य सम्मति ।
प्रतापनारसिंहाख्य पाकयज्ञप्रकाशक ॥
कृत्वा समर्पयामास नृसिंहाय परात्मने ।
अत्र युक्तमयुक्त वा मोहेन लिखित मया ॥
तत्र चेम प्रकुर्व्वन्तु सत सन्तो दयालव ॥

*Col* — इति श्रीमत्तोरोनारायणात्मज-श्रीरुद्रदेवकृते प्रतापनारसिंहाख्ये पाकयज्ञप्रकाश समाप्त । समाप्तोय ग्रन्थ ॥

*Post Colophon* —श्रीचण्डिकार्पणमस्तु ॥

यदतिहृदयवेगाल्लेखनीभ्रान्तिभावात्
नयनवचनसज्ञाक्षोभशब्दावलम्बात् ।
लिखितमज्ञातबुद्ध्या यन्मया पुस्तकेस्मिन
करकृतमपराध क्षन्तुमर्हन्तु सन्त ॥

आनंदेदावत्सरे (?) आषाढे मासि शुक्लपक्षे सप्तम्या सौम्यवासरे तद्दिने विठ्ठलभट्ट आकूतस्य सूनुना व्यकटेन लिखित स्वार्थं परार्थं ।

The *Mangalacarana* and the scope of the work

श्रीगणेशाय नम ॥ श्रीसरस्वत्यै नम etc, etc

नारसिंह श्रिया युक्त गणेश च सरस्वती ।
आपस्तम्बमुखान् मान्यान् प्रणम्य पितर गुरु ॥
ततो नारायणसुतो रुद्रदेव इति श्रुत ।
ग्रन्थाननेकान् सवीक्ष्य विदुषा प्रीतये सदा ॥

प्रतापनारसिंहाख्यग्रन्थ प्रारभते तत ।
अविघ्न वै न्ृप चास्य समुद्धि ब्रह्मणस्पते ॥
तत्रादौ पाकयज्ञाख्य प्रकाश इह चोच्यते ।
यस्यानुष्ठानमात्रेण देवर्णान्मुच्यते द्विज इति ॥

तत्रादौ ऋणत्रयस्वरूपमुक्त तैत्तिरीयसंहितायां जायमानो वै ब्राह्मणस्त्रि-भिर्ऋणवा जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्य प्रजया पितृभ्य इति तत्र यज्ञ-शब्देन एकविंशतिर्यज्ञा तत्र सप्त पाकयज्ञसंस्था सप्त हविर्यज्ञसंस्था सप्त सोमसंस्था इति तेषा प्रत्येक नामान्युक्तानि गौतमदर्शने ।

औपासन वैश्वदेव पार्वणमष्टका मासि श्राद्ध सर्पबलिरीशानबलिरिति सप्त पाकयज्ञवाच्यानि । अग्निहोत्र दर्शपूर्णमासावाग्रयण चातुर्मास्यानि निरूढपशु सौत्रामणि पिण्डपितृयज्ञादयो दर्वीहोमा इति सप्त हविर्यज्ञसंस्था । अग्निष्टोमो-ऽत्यग्निष्टोम उक्थ्य षोडशी वाजपेयोऽतिरात्रोऽप्तोर्याम इति सप्त सोमसंस्था इति । अनेन ज्ञानमाप्नोतीति स्मरणाच्च । पाकयज्ञ इति कर्मनामधेय । लौकिकाना पाकयज्ञशब्द इति गृह्यप्रश्नात् । आश्वलायनेन तु पाकयज्ञाना त्रिविधत्वमुक्त । त्रय पाकयज्ञा हुता अग्नौ हूयमाना अनग्नौ प्रहुता ब्राह्मणभोजने ब्रह्मणि हुता इति व्याख्यातमेतन्नारायणवृत्तिकारेण पाकयज्ञा अल्पयज्ञा प्रशस्तयज्ञाश्चेति अतस्तेषा मते यत्किंचिद्धोमबलिब्राह्मणभोजन तदपि सर्व पाकयज्ञसंज्ञमेवेति । आपस्तम्बाना तु औपासनादीना सप्तानामेव पाकयज्ञसंज्ञा तत्रादौ औपासन उच्यते ॥

## 695.

2978 **नागबलिप्रयोगः ।** *Nāgabaliprayoga*

Being an extract from Pratāpa Narasinha

*By Rudradeva, son of Toronārāyaṇa*

*Colophon* —इति तोरोनारायणभट्टात्मज रुद्रदेवकृते प्रतापनारसिंहाख्ये संस्कारप्रकाशे नागबलिप्रयोग । बोधायनोक्त स्त्रि(?) ॥

*Beginning* —प्रतिकनागोपद्रवनिवृत्त्यै नागबलि कार्य । अत्रकाल गुरुशुक्रास्तादिरहिते अयनद्वयेपि पौर्णमास्याया पञ्चम्या आश्लेषा युक्तदिने वा कुर्यात । तत्राधिकारार्थं चतुर्दशकृच्छ्राचरेत् । तत्र प्रयोग । उक्तादिनात् पूर्वेद्यु तदहरेव वा पार्षद प्रदक्षिणीकृत्य

नत्वा तदग्रे निष्कं तदर्द्धं तदर्द्धं वा निधाय कृताञ्जलिर्भूत्वा मम इह जन्मनि जन्मान्तरे वा मया मम पत्न्या मम पुत्रेण मत्सम्बन्धिभिर्वा ज्ञानादज्ञानतो वा कृतसर्पवधदोषपरिहारार्थं प्रायश्चित्तमुपदिशन्तु भवन्तः । etc., etc.

For the MS. and the work see L. 4185

It relates to expiation for killing a serpent, according to the precepts of Baudhāyana

The Saṃkalpa runs:—

3B. मया मम पुत्रकलत्रमातादिभिर्वा इहजन्मनि प्रागतीतसमस्तजन्मसु बाल्यवार्द्धक्ययौवनान्यतरावस्थासु ज्ञानतोऽज्ञानतो वा प्रसङ्गतो ऽप्रमादो(?)वा...... य' कृत' सर्पवधः तज्जनितपापसमूलोन्मूलनद्वारा तत्प्रयुक्तकुष्ठदद्रुकण्डूपामानेत्ररोगवर्णरोगविस्फोटकगण्डमालालूताद्यपस्मारप्रभुभूयमानचिकित्सानानाविधव्याधिजातापत्यविनाशदारिद्र्यादिक्लेशनिवृत्तये आयुरारोग्यपुत्रादिसान्ततिप्राप्ति सर्पस्य पुण्यलोकावाप्तये मदाज्ञाना ... ... सर्ववाधाविनिवृत्तये समस्तसर्पाधिनाथश्रीमदनन्तप्रीतये यथाशक्ति यथाज्ञान ... ... ... . बौधायनमुनिप्रोक्तप्रकारेण सर्पसंस्कारं करिष्ये ।

## 696.

### 6383. आपस्तम्बानुयायिनामाह्निकप्रयोगः ।

*Apastambānuyāyinām āhnikaprayoga*

*Part of Pratāpanārasiṃha, by Rudradeva, son of Toronārāyaṇa, who wrote at the request of Ānanda*

Substance country made paper 7⅞ × 4⅞ inches Folia 45 of which the first 3 are missing Lines, 11 on a page Extent in ślokas 800 Character, modern Nāgarī Appearance fresh Copied in Śaka 1693

The compiler was a native of Pratiṣṭhāna and his patron, of Devagiri

*Colophon* —श्रीमच्छ्रिवालयच्छेत्राद्दक्षिणे योजनमात्रे देवगिरौ श्रीमद्भारद्वाजकुलोत्पन्नत्र्यम्बकभट्टात्मजभट्टलक्ष्मणसुतानन्दविदुषा प्रेरिते (?) गोदावर्या उत्तरे तटे प्रतिष्ठानक्षेत्रे श्रीमद्भारद्वाजगोत्रोत्पन्न

तोरोनारायणात्मजचन्द्रदत्तकृते प्रतापनारसिंहाख्ये आपस्तम्बानुयायिनामाह्निकप्रयोगः ।

*Post Colophon Statement* —

रामनन्दाङ्कभूयुक्ते शाके मन्दे शुभे मिते ।
वसौ देवालयपुरे त्रिदा गणप-सन्निधौ ॥

आपस्तम्बाह्निक सर्व्वात्मा श्रीरामलिखिता तद्भाग नाना यश्विरामदास ।

It gives at the end the date of its compilation as Sak 1624

सूत्रसूत्रान्तरव्याख्यानिबन्धांश्च यथामति ।
शिष्टाचारं तथा दृष्ट्वा कृत्वा तैः सह सम्मतिम् ॥
नारायणात्मजेनेत्थमुक्त (क्ता) चाह्निकमुत्तमम् ।
विदुषां प्रीणनार्थाय स्वसिद्धान्तेन गुम्फतु ॥
शाके वेदाक्षिषट्चन्द्र(न्द्रे)मितेऽब्दे दक्षिणायने ।
नभस्ये कृष्णपञ्चम्यां तोरोवदेण निर्म्मितम् ॥

## 697

2950. **पाकयज्ञादिनिर्णयः ।** *Pākayajñādinirṇaya*

*By Candracūḍa Bhaṭṭa, son of Umāśaṅkara*

Substance country made paper 8¼×3¼ inches Folia, 5 Lines, 9 on a page Extent in ślokas 90 Character Nāgara of the eighteenth century Appearance discoloured Complete

For a description of the work see L 1814

The five opening verses and the last verse giving the date of the composition of the work are not in the present MS

## 698.

1062 **संस्कारनिर्णयः ।** *Saṃskāranirṇaya*

*By Candracūḍa Bhaṭṭa*

Substance country made paper 8¼×4¼ inches Folia 71 Line 13 on a page Extent in ślokas 1860 Character Nāgara Appearance old Complete

A comprehensive manual on the rites and ceremonies with their proper astrological time and season and with various opinions old and modern. By Candracūḍa Bhatta, son of Umana Bhatta. This manual is mainly based on Āpastamba.

*Beginning*.—प्रणिपत्य महादेवं चन्द्रचूडेन धीमता।
संस्काराणां प्रयोगस्य निर्णयः प्रोच्यतेऽधुना।

तत्रादौ गर्भाधानमुच्यते।

*Col*.—इति श्रीमत्पौराणिक धर्म्मभट्टसूनुश्रीमद्विद्वन्मुकुटमाणिक्य-उमणभट्टसूरिसूनुचन्द्रचूडभट्टविरचितः संस्कारनिर्णयः समाप्तिमगमत्॥ श्री श्री॥

Authorities quoted—

नारद, मदनरत्न, पारिजात, भविष्य, शार्ङ्गाब्धि, अपरार्क, गौतम, धर्म्मसूत्र, वृद्धमनु, शौनक, त्रिकाण्डमण्डन, प्रचेता, पारस्कर, कात्यायन, वायवीये, आपस्तम्ब, हरदत्त, कूर्म्मपुराण, ज्योतिःपराशर, कपर्द्दिस्वामिन्, गोभिल, सुरेश्वर, सुमन्तु, उज्ज्वला, याज्ञपार्श्व, रत्नमाला, ऋष्यशृङ्ग, रामाण्डार।

विधानमाला, गर्ग, हेमाद्रि, विज्ञानेश्वर, शिवरहस्य, माधवीय, याज्ञवल्क्य, वृहस्पति, देवल, हारीत, गृह्य, व्यास, शङ्ख, पराशर, वृद्धशातातप, मिताक्षरा, सवर्त्त, मार्कण्डेय, बोधायन, उशना, सूत्रार्थसार, काण्वाग्निनि, हारीत, मातुकर्ण, सुदर्शनाचार्य्य, यम, वराह, वशिष्ठ, सत्यव्रत, गालव, आश्वलायन, विष्णु, जैमिनि, विष्णुधर्म्म, प्रजापति।

*It ends*.—इत्थिस्त्वयोरन्तर्धानभूतं दक्षिणतः प्रयत्नं विदधाति तस्य
शुभमिच्छता पालनं न कुर्य्यात्। इयत्नमतिविस्तरेण।
आपस्तम्बीयसूत्रं बुधवरसुलभं हारदत्तञ्च भाष्यम्
दृष्ट्वासौ दर्शनं ता विविधकृतमहापद्धतौ मत्रिबन्धान्।
पश्चो यश्चन्द्रचूडाभिधबुधनिचयासन्नमानेन (?) रम्य
संस्काराणां द्विजन्मप्रमुदितहृदयो निर्णयोऽयं समाप्तः।
यच्च दृष्टमदृष्टं वा मोहेन लिखितं मया।
तच्च क्षमा प्रकुर्व्वन्तु सन्तः मन्ता दयालवः॥

## 699

2960 *The Same*

Substance country made paper 9×3¾ inches Folia 106 Lines 10 on a page Extent in ślokas 2020 Character Nāgarī Appearance discoloured The first leaf is missing

*The last Colophon* —

इति श्रीमत्पौराणिकधर्म्मभट्टसूनुश्रीमद्विद्वन्मुकुटमाणिक्यउमणा-
भट्टसूरिसूनुचन्द्रचूडभट्टविरचितः संस्कारनिर्णय समाप्तिमगमत् ।

## 700.

10082 *The Same*

Substance country made paper 10⅝×4¾ inches Folia 60 Lines 11 on a page Extent in ślokas 1600 Character Nāgarī of the nineteenth century Appearance fresh Complete

*Colophon* —इति श्रीमत्पौरा[णि]कधर्म्मभट्टसूनुश्रीमद्विद्वन्मुकुट-
माणिक्यउमणभट्टसूरिसूनुचन्द्रचूडभट्टसूरिविरचित संस्कारनिर्णय
समाप्त ।

For the work see I O Cat 1 No 165

## 701.

3216 स्थालीपाकप्रयोगः । *Sthālīpākaprayoga*

*By Damodara, son of Candracūḍācārya*

Substance country made paper 8½×4 inches Folia 17 Lines 8 on a page Extent in ślokas 200 Character Nāgara of the eighteenth century Appearance discoloured The 14th leaf is missing

The maṅgalācaraṇa and the object of the work.

नमस्कृत्य गणाध्यक्ष ईश्वरीं कुलदेवताम् ।
बहुयग्रामसंस्थेन चन्द्रचूडाचार्यसूनुना ॥ १
दामोदरेण क्रियते प्रयोगोऽयं यथामति ।
नानापद्धतयः सन्ति ज्ञानार्थं केवलाश्च ताः ॥ २

यथाक्या कर्म्मकरणे ह्यविज्ञाना विशेषत ।

तदर्थ वक्ष्यतेऽत्रैव प्रयोगो विधिवन्मया ॥ ३

सूत्रप्रायस्तस्य कर्त्तु पाठिनार्थावबोधक ।

सद्भि सशोध्य शिष्याणा पाठनीय प्रयत्नत ॥ ४

ॐ अथ स्थालीपाकप्रयोगस्तस्यान्वाधानाद्यारभ्यतथापि समारोपे संस्कार-कर्म्मसु प्रान्त्यादिषु च प्रयुक्त ॥ इत्यादि ।

*It ends* —प्रणीतापाच नासिकाग्रसम तथैव निदध्यात् एतद्व्रह्मकरणमित्यक्त चेत् प्रणीतासस्कार पूर्व्ववत् कुर्य्यादिति ।

*Colophon* —इति स्थालीपाकप्रयोग ।

## 702.

**2318 जातेष्टिप्रयोगः (आपस्तम्बीयः) ।** *Jateṣṭiprayoga.*

Substance country made paper 8¾×4 inches Folium one Lines, 8, 9 on a page Extent in slokas 17 Character Nagara of the eighteenth century Appearance discoloured Complete.

On the birth ceremony

*Beginning* —अथ जातेष्टिप्रयोग ।

यद्येवादि रक्षा यक्ष्ये जात पुत्र पूतस्तेजस्व नादरे इन्द्रियावी पशुमान् भवतु । इति सकल्प्य विद्युत् । अभ्ययजाय । ऐष्टि चति । पौर्णमास तत्रम् । सतदग्ध सामिधेन्य । पात्रप्रयोगकाले निरूप्यिष्यमाणानि स्फ्यादिप्राकृतानि पात्राणि निर्व्वापकाले आग्नेयं निरूप्यामये वैश्वानर । निर्व्वपति । अग्ने त्वय रक्षसार्थ वैश्वानर त्वय रक्षस ॥

On the left hand upper corner

*Col.* —इति जातेष्टि ।

## 703.

1063. **आपस्तम्बाह्निकम्।** *Āpastambāhnika.*

*By Kavimandana Govardhana*

Substance, country made paper 11¼×5 inches Folia, 67 Lines, 10 on a page Extent in Ślokas, 2050 Character, Nagara Date, Sam 1752 Appearance, old Complete

An elaborate digest on the rules of conduct and daily duties of a householder in accordance with Āpastamba

*Beginning* —श्रीगणेशाय नमः।

नत्वा महेश्वरं देवमाह्निकं तैत्तिरीयके।

गोवर्द्धनः प्रतनुते कविमण्डनवंशजः।

अथातः सामयाचारिकान् धर्म्मान् व्याख्यास्यामः इति सूत्रम्।

*It ends*.—

उपानहौ तु वासश्च धृतानन्यैर्न धारयेत्।

अन्यानाः...गोष्टि (?) ब्राह्मणानाञ्च सन्निधौ।

आहारे जपकाले च पादुके परिवर्जयेत्। इति।

*Col.*—इति कविमण्डनगोवर्द्धनकृतापस्तम्बाह्निकं समाप्तम्।

*Post Col.*—स्वार्थं परार्थञ्च लिखितं पुस्तकं। संवत् १७५२ भाद्रपदि पञ्चमी रविवारे। शुभमस्तु।

## 704.

3110. **विश्वप्रकाशिकापद्धतिः।** *Viśvaprakāśikāpaddhati.*

*By Viśvanātha Bhaṭṭa, the son of Puruṣottama Bhaṭṭa, the grandson of Trivikrama and the great-grandson of Nārāyaṇācārya*

A manual for the performance of Gṛhya rites It opens with a salutation to Āpastamba

Rājendralāla noticed this MS under No. 4116, but his account does not tally with the present MS

Substance, country made paper 11 × ? inches Folia, 282 Lines 12 on a page Extent in ślokas, 10,?00 Character Nāgara of the eighteenth century Appearance, discoloured and dilapidated Incomplete at the end

The first leaf, which is very much delapidated, contained much information about the author, his family, and the date of his birth When Rājendralāla noticed the present manuscript under No 1116, it was in much better condition.

See also I.O. Catal 369

## 704A.

### 3002

Substance, country-made paper 10½ × 4½ inches Folia, 14 Lines 12 on a page Extent in ślokas, 280 Character Nagara Appearance discoloured and worn out.

It contains two different treatises

(I), 2A. इति दीक्षितमोनिमल्लारिकृतौ मासि श्राद्धमानोमन्यासः।

(II). इति सम्राट्स्थापति भट्टरघुनाथानुक्रान्तो मासि श्राद्धप्रयोगः समाप्त ।

The first contains disquisitions on the monthly srādha ceremony and the second directions for its performance

(I) *Begins* —

> अष्टकादिश्राद्धेषु मासि श्राद्धविधिः। सांवत्सरिकादि दर्शश्राद्ध-
> विधिः सर्व्वेषां। नामचोदनालिङ्गानिर्देशाभ्या प्रत्यक्षविधिनाति
> देशस्य बलवत्त्वादष्टकादिषु स्पष्टः सूत्रेऽतिदेशः।

(II) *Begins* —

> नत्वा रामं गणेशानमापस्तम्बमुनिं तथा।
> तत्सूत्रभाष्यकारादीन्सन्मार्गेण निबध्यते ॥
> सम्राजा रघुनाथेन मासिश्राद्धविधिक्रमः।
> यदत्र स्खलितं किञ्चिच्छोध्य तद् बहुवेदिभि' ॥

## 705.

299 प्रयोगसारः । *Prayogasara*

*By Kesava Svami*

For the MS see L 26

This has been extensively repaired The first 89 leaves belong to Prayogasara, which is incomplete There is one leaf which cannot be accounted for There are 16 more leaves on एकादशिनी प्रयोग which is complete

For a complete MS of Prayogasara see I O Catal No 370 It belongs to the school of Baudhayana and follows Bhavasvami s commentary

## 706

749 *The Same*

A fragment coming to the end of the first chapter only, namely, Darsapurnamasaprayoga

Substance country made paper 9¾×4½ inches Folia 47 Lines 8 on a page Extent in slokas 75. Character Nagara Date Sam 1814 Appearance old

For description of the work see I O Catal No 870 and L 26

*The last Colophon in the MS* —

इति केशवस्वामिकृते दर्शपूर्णमासौ सम्पूर्णौ ।

*Post Colophon Statement* —

संवत १८१४ मिति श्रावणवदी १४ चतुर्दशी भृगुवासरे । लिषदं पुस्तक जीवनरामत्रिवाडी लिख्यत ।

22A, इत्युद्धरणप्रायश्चित्तम्, 23B, इति कालातिपत्तिप्रायश्चित्तम्, 28A, प्रवासादागतस्य विधि, 29A, इति सामिकप्रयाणविधि, 29B, इत्युपघातप्रायश्चित्तम्,

The work ends in 29B, then come the kārikās (रूप कालो etc) with notes

Authorities quoted and consulted

प्रायश्चित्तचन्द्रिका, 4A, सिद्धान्तभाष्यकार, 21B, 26A, देवजात, 26B, त्रिकाण्डमण्डन, 29A, देवयाज्ञिक, 30B, लौगाक्षि।

## 720

2947 **पुनराधेयक्रमः।** *Punaradheyakrama*

*By Ananta Deva*

Substance country made paper 9×4 inches Folia 3 Line 13 14 on a page Extent in slokas 70 Character Nagara Appearance fresh Complete Date Samvat 1866 and Saka 1 31

The method of rekindling the sacred fire, as directed by Baudhāyana It is a chapter of Anantadeva's work

*Colophon* --

इति अनन्तदेवीये बोधायनोक्त-पुनराधान समाप्तम्।

*Post Col* —सवत् १८६६ शके १७३१ माघमासि कृष्णपक्षे प्रतिपदायां तद्दिने देवोपनामकरङ्गनाथदेवात्मजकोंडदेवेन लिखितं। यादृश-मित्यादिना।

*Beginning* — श्रीगणेशाय नम।

अथ बोधायनोक्तपुनराधेयक्रम — यस्याधानकालादारभ्य सवत्सरसमाप्ते र्व्वाक् पुत्र-भ्रातृ-मातृ बन्धु पशूनां धनस्य वा हानिर्यजमानस्य महारोगो वा जायते अरण्योसमारूढो वा अग्निर्नश्येदन्यानि वामाऽनुगत्यादीनि भवन्ति स पुनराधान कुर्यात्।

721.

765 **नक्षत्रसत्रप्रयोगः** *Nakṣatrasatraprayoga,*

containing all the Nakṣatreṣṭis

*By Ananta Deva, son of Āpadeva*

For the manuscript see L 1510 Foll 14—16 are missing

Colophon on the obverse of the last leaf —

इति श्रीमदापदेवसूनुनानन्तदेवेन कृतो नक्षत्रसत्रप्रयोग समाप्तः ।

*Post Col begins* —प्रायश्चित्तप्रदीपे । एवमोपवसथ्येन सह नक्षत्रहविषा द्वाविंशद्दशानि भवन्ति । नक्षत्रसत्रमध्यपातिन्यो दर्शपूर्णमासेष्टी स्वे स्वे काले कर्त्तव्ये अतिक्रमितव्ये समाप्यनन्तर पशुनेष्ट्वा ऽतिपन्नप्रायश्चित्तार्थं पाथिकृतीष्टवेष्टिं कृत्वा अतिक्रान्तदर्शपूर्णमासेष्टी कुर्यात् । नक्षत्रसत्रेणेष्ट्वा पाप निनुद्य ज्योतिष्टुमुपयद्यते पशुनर्दृत्यु जयतीति । सर्व्वासा नक्षत्रेष्टीनां त्रयोविंशतिधेनुर्वा । सर्व्वास नक्षत्रे[ष्टि]षु प्रथममाग्नेयमष्टाकपाल तन्नक्षत्रहविर्मध्ये पश्चात्तदनुमत्यै चरु निर्वपेत् । सर्व्वासु नक्षत्रे[ष्टि]षु नक्षत्रदेवताहविषा पत् दय वदेव अग्न्यनुमत्यो । अन्यच वायव्ययस आज्यहविषश्च । होतु सामिधेनीषु समिध्यमाना च समिद्धां धान्तरेण स्वादृद्वायस्य थियो । वृषी दाम्य पुर एतेति धीमत्यै धाय्ये । सर्व्वासा नक्षत्रेष्टीना आज्यभागयो अग्निनारयिमश्नवत् गयस्फान इत्याज्यभागयोरनुवाक्ये । जुषाणोऽग्निर्घृताग्नः सोम इत्याज्यभागयोर्याज्ये [स]र्वत्र । आयुष्कामस्य तु । त्वा नो अग्ने सुचेतना त्व सोम महे भगमित्याज्यभागयोरनुवाक्ये नित्ये याज्ये । अग्निर्मूर्द्धा, भुवो यज्ञस्या । अन्वाद । अनुनोद्यानुमतिरन्विदनुमते त्व । प्रपञ्चया । सर्व्वासु नक्षत्रेष्टिषु सहृदेवतयोरग्नेरनुमत्याश्च एता एव याज्यानुवाक्या अनु मन्तव्यश्च । सर्व्वासा नक्षत्रेष्टीना पुरस्तात् स्विष्टकृत स्रुवेण उपहोमान् जुहुयात् सर्व्वासां नक्षत्रेष्टीनां हव्यवाह स्विष्टमग्ने एते एव सयाज्ये । सर्व्वासा नक्षत्रेष्टीना अन्वाहार्यश्च सह गौर्दक्षिणा । नक्षत्रेष्टयुपक्रमदिवसप्रभृति समाप्तिपर्य्यन्त पत्नीयजमानौ ब्रह्मचारिणो भवत । अथ शायिनो ब्रह्मचारिणौ स्याताम् । यजमानो हविरुच्छिष्ट भुञ्जीत । हविष्य पत्नी यदा उभावपि हविष्य अश्नीयाताम् । नक्षत्रसत्रे स्वानां ऋत्विजां अन्ययजमानस्यार्त्विज्य निषिद्ध । एव चातुर्मास्यादिसर्व्वकर्मसु इति प्रदीपे ।

तुच्छ इति छिद्रत्येत्यत्र च्छकारेकारमकारस्य एव छिकार पठनीय इति प्रतिभाति इत्यादिसर्व्वग्रन्थेषु दर्शनात्। रामाण्डारेण आश्वलायनोक्तौ ऊकारो न भवतीत्युक्तत्वात्। आपस्तम्बीयग्रन्थे ऐकार एव आश्वलायनाना तु ऊकार एव।

When is the Naksattresti to commence?

2A सा या वैशाख्या पूर्णमास्या पुरस्तादमा[वा]स्या भवति सा सकृत् सवत्सरस्यामभरणीभि सम्पद्यते। तस्यामन्वारभेत। अपि वा अमावास्याया पौर्णमास्या वोपवसेत् यस्या तत् लक्ष्म सम्पद्यते। तल्लक्ष्म भरणी। इदञ्च यथाप्तुलमेव थाचख्यौ गोपाल। प्रदीपे तु वैशाखपूर्णमास्या अमावास्याया वारम्भ। अथवा फाल्गुनादिमासत्रये यस्यां तिथौ भरणीयोगस्तस्यामारम्भ कार्य्य। यस्या तत् लक्ष्म सम्पद्यत इत्युक्तत्वादिति व्याख्यात। कार्त्तिक्या वा पौर्णमास्या भरणीयुक्ताया मारम्भ इति कपर्द्दिस्वामिन।

5B, कृत्तिकेष्टि, 6B, मृगशीर्षेष्टि आर्द्रेष्टि पुनर्वस्विष्टि, 7A, तिष्येष्टि 7B, अश्लेषेष्टि, 8A, मघेष्टि, 9A, पूर्व्वफल्गुपूर्व्वेष्टि (?), उत्तरेष्टि, 9B, हस्तेष्टि, चित्रेष्टि, 10B, स्वातीष्टि, 11A, विशाखेष्टि, पौर्णमासीष्टि, 11B, अनुराधेष्टि, 11B ज्येष्ठेष्टि 12A, मूलेष्टि, पूर्व्वाषाढेष्टि, 12B, उत्तराषाढेष्टि, अभिजिदिष्टि, श्रवणेष्टि, 13A, धनिष्ठेष्टि, शततारेष्टि, 13B, पूर्व्वप्रोष्ठपदानक्षत्रेष्टि, उत्तरप्रोष्ठपदनक्षत्रेष्टि (14 and 15 missing), 16A नाक्षत्रीष्टि, सौर्य्यनाक्षत्रीष्टि, आदित्येष्टि, 16B, वैष्णवीष्टि, वैश्वानरेष्टि।

There are in this number the first two leaves marked 1 and 2, of Punaradheyakrama See Catal No 720

## 722

*2410 The Same*

For the MS see L 4181

In leaf 5A—इति उपोद्घात। अथ प्रयोग।

Authorities consulted —

2A, चन्द्रिका, गोपाल, 2B, कपर्द्दिस्वामिन, 3B, न्यायविद, 5A, आश्वलायन, 8A, लौगाक्षि, 9A, प्रदीप।

*Colophon* —इति नक्षत्रसत्रप्रयोग समाप्त।

*Post Colophon* —

> प्रर्क १६७४ ऋङ्गिरानामसंवत्सरे श्रावणशुक्लतृतीयादिने भाग वतोपनाम्ना यज्ञेश्वरेण लिखित नक्षत्रसत्र समाप्तम्। स्वार्थं परोपकारार्थंच। श्रीसिद्धेश्वरार्पणमस्तु।

## 723

1975 **सोमप्रयोगः ( बोधायनीयः )।** *Somaprayoga*

*By Rudradeva, son of Anantadeva and grandson of Āpadeva*

Substance country made paper 9¼×4 inches Folia 14 Lines 3 on a page Extent in ślokas 4200 Character Nāgara Appearance discoloured and brittle Complete

The last Colophon in 163A

> इति श्रीमदापदेवपौत्रेण अनन्तदेवपुत्रेण रुद्रदेवेन कृत सोमप्रयोग समाप्त।

163B and 164 are taken up with —

अपूर्वान्यास्तुवेण प्रचरणा वा सर्वत्र प्रायश्चित्तानि।

For a description of the work see I O Catal No 398

It begins after the Mangalācarana —

आश्वलायनप्राखिनो यजमानस्य बोधायनसोमप्रयोग।

## 724.

802 **श्रौतप्रायश्चित्तचन्द्रिका।** *Śrauta Prāyaścitta candrikā*

*By Viśvanātha Bhatta, the son of Narasimha Dīksita*

Substance country made paper 9×4 inches Folia 54 Lines 8 on a page Extent in ślokas 1080 Character Nagara Appearance very old Complete

This belongs to the Baudhāyana School of the Black Yajurveda

See L 165 and I O Catal No 448 Before the colophon, the present manuscript has the following —

तिमिरे मखसुरतरुतः फलानि सुभुतं (?)।
चकरामयथाकरणं वीरवितथयत पन्द्रिकेया नः ॥

## 725.

10638. **महाग्निचयनं ।** *Mahāgnicayana.*

(Of the School of Baudhāyana.)

*By Vāsudeva Dīkṣita*

Substance, foolscap paper 8¼×4 inches Folia, 154. Lines, 9 on a page Extent in Ślokas, 2000 Character, modern Nagara Date, Śaka 1738 Appearance, old and discoloured

Written about 100 years ago under the patronage of Ānanda Rāya, the minister of the descendants of Shivaji's step-brother.

*Beginning*:—

ॐ बौधायनीयकर्म्मान्तद्वैधकल्पानुसारतः ।
चक्रपच्छ्येनचितः प्रयोगः प्रवितन्यते ॥
उपाः संभरिष्यन्नुपकल्पयतेऽश्वं च गर्दभं च तयोरेव रशने मौञ्ज्यौ
वा कुशमय्यौ वा + च आश्मयामयं वैणवीं व्याममात्री च
सुषिरोभयतः शिला ॥ etc., etc. Baudh. X. I

143A, इति श्रीमत्संततसंतन्यमानश्येनकूर्म्मपोडशारथचक्राकाराद्यनेका-
गुणविराजमान-महाग्निविलसितप्रौढापरिमितमहाध्वरस्य श्रीशाहजिस्रंभजितु-
क्कोजिभोसलचोल-महीपालत्रयामात्यधुरंधरस्य श्रीमत आनन्दरायविदत्सार्व्व-
भौमस्य महापुरोपोषेण तदभ्यर्थ्यया वाल्य एव तद्यानिर्वर्त्तितापरिमितमहाग्नि-
विष्टंभितमहाध्वरेणाग्रजन्मविश्वेश्वरवाजपेययाजिना लब्धविद्यावैशद्येन महादेव-
वाजपेययाजिसुतेनान्नपूर्णागर्भजातेन वाराणशीवास्तव्येन वासुदेवदीक्षितविदुषा
विरचितो बौधायनीयमहाग्निप्रयोग पाटनकरश्रीबालकृष्णदीक्षितार्थं तच्छंभु-
भट्टैर्लिखिता ॥

अथ सौ[त्रा]मणीचयनाङ्गं आवश्यकं कर्त्तव्यं । तत्र प्रयोगः । अनन्तरे
पर्व्वणि यजनीये वा पुण्यनक्षत्रे वा सौत्रामण्या यजेत मैत्रावरुण्या वा सा हवि-

पंचेन याज्ञाता तामस्यापि व्याख्यास्यामो भाष्य इध्यादि न पुनराह व्याख्यानु-
रूपं छला भिन्नप्रयोगत्वात्।

*Last Col* :—इति बौधायनाग्निचयनप्रयोगः समाप्तः।

*Post Col* :—शके १७३८ धातानाम संवत्सरे ज्येष्ठशुद्धत्रयोदश्यां
मन्दवासरे तद्दिने पुस्तकं समाप्तम्।

## 726.

59 **महाग्निचयनप्रयोगः ॥** *Mahāgnicayanaprayoga*

*By Vāsudeva Dīkṣita, son of Mahādeva Vājapeyi, brother and pupil of Viśveśvara Vājapeyayājī*

*For a notice of the present manuscript see L. 836*

The work was compiled under the patronage of Ānanda Rāya Vidvat Sarvabhauma, the minister to the three Kings of Tānjore in the Cola country, namely, 1) Shahaji, (2) Sarfoji, (3) Tukāji.

The Paddhati is preceded by the mantras used in Agnicayana, which take up sixteen leaves. The beginning of the mantras is quoted in L. 836, we give below the end

देवो अग्निः स्विष्टकृदतिच्छन्दसा सर्वं। वेतु विपन्तु चतुर्थीनामेको वियन्
चतुर्वेतु। अतर्द्धयदवर्द्धयं चतुर्वर्द्धतामेको वर्द्धयं चतुरवर्द्धयत्। स्वादौं त्वा सोम
सोमः सुरावन्तं सोसेन मित्रो मित्रदेवा होता यक्षत् समिधेन्द्रं समिद्ध इन्द्र
व्यचर्षणि प्रादेवं वर्हिरिन्द्रं सुदेवं होता यक्षत् सनिधायिं समिद्धो अग्निरग्निना
ग्निनो। वर्विरिन्द्रियं देवं वर्हिः वरस्वत्वमिमयो होता यक्षदौडमयदे समिद्धो अग्निः
समिद्धा वसन्तनदेवं वर्हिरिन्द्रं वयो धर्मं विप्रतिः।

The beginning of the Paddhati is lost in the missing leaves Its end is quoted in L. 836

## 727.

1053 **महाग्निसर्व्वस्वम्।** *Mahāgnisarvasva.*

*By Vāsudeva Yajvan.*

Substance country-made paper 8¾ × 1¾ inches Folia 11 Lines, 11 on a page Extent in ślokas, 270 Character Nāgarī. Date, Saka 1715 Appearance, tolerable Complete ( )

A digest on the Mahāgni rite according to the Kalpa-sūtra of Baudhāyana beginning with the exposition of the Dvaidha and Karmānta Sūtras. Author, the same as above.

*Beginning* :—

श्रीगणेशाय नमः ।
धर्म्मायनबोधायनमीहध्वे यदि तद्भवे किमपि ।
बोधायनबोधायनमाचार्य्यमिम भुङ्क्तमल ।
दुर्ज्ञेय विरलप्रचारमलिनं बोधायनीय महत्
सूत्र व्यस्तविशीर्णभाष्यशकलानन्विष्य संगृह्य च ।
उद्धृत्य स्फुटमक्रमेण विदुषां बोधाय बोधायन-
श्रौते व्याप्रियते महाग्निविषये सन्तो दयन्तामिह ॥
शाहजिशरभजि तुकाजि भोसालचोलक्षितीन्द्रसचिवस्य ।
गङ्कुर्म्मरघचक्रच्छन्दश्छिन्नमहितसन्ततमखस्य ॥
आनन्दराजविदुषः पञ्चपुरुषक्रमागतोऽध्वर्यु ।
श्रीवासुदेवयज्वा संप्रति तनुते महाग्निसर्वस्वम् ॥ ४ ॥
बोधायन प्रणम्यामि कल्पसूत्रं यथामति ।
द्वैधकर्म्मान्तसूत्राभ्या सह व्याख्यास्यतेतरा ।

*It ends*:—

अत एवाग्निकल्पसूत्रे आचार्य्यैरुक्तं षडविध सप्तविध चेत्यादि इत्यास्तां तावत् ।

*Post Col.* —

शके १७१५ आश्विन शुद्ध ५गुरौ वैद्यनाथेन लिखित पुण्यग्रामे ।

## 728

## 1900 बौधायनदर्शपूर्णमासयजमानप्रयोगः ।

*Baudhāyana Darśa Pūrnamāsa Yajamānaprayoga.*

Substance country made paper. Folia 30. Lines 9 on a page. Extent in ślokas 260. Character Nāgarī. Date Samvat 1872. Appearance, oldish. Complete.

Duties of the sacrificer as opposed to priests, in the performance of the new and full moon rites, in accordance with Baudhayana

*Beginning* —

श्रीगणेशाय नम ।

अथ बौधायनदर्शपूर्णमासयजमानप्रयोग ।

उक्तान्वाधानदिने प्रातरग्निहोत्रहोमानन्तर केशश्मश्रुलोम नखानि वापयित्वा सपत्नीक स्नात्वा हतनवनीतेलाभ्यञ्जन हताञ्जन- च्चेकविंशतिदर्भपिञ्जने पवन कुर्यात् । यत्यपि पवनाभ्यञ्जनाञ्जनवर्जं सर्व्व कुर्य्यात् । ऋत्विजश्च कुर्यु । देशकालो सङ्कीर्त्य श्रीपरमेश्वर- प्रीत्यर्थं पौर्णमासेष्ट्यङ्गभूतस्नानपवनमन्वाधमनमन्त्रप्रोक्षणानि क० दर्शेतु दर्शेष्ट्यङ्गभूत इति विशेष ।

*It ends* —

ब्रह्मार्पण ० हरिदाता ० चतुर्भि ० एकोवि ० अनेन पौर्णमासे ष्ट्याख्येन कर्म्मणा वा दर्शेष्ट्याख्येन कर्म्मणा यज्ञनारायण प्रीयताम् ।

*No Colophon* —

*Post Colophon* —सवत् १८०३ इद पुस्तक जोशी इत्युपनामक हरभट्टस्य सुत मिकभट्टस्येद पुस्तकम् । शुभ भवतु ॥

## 729.

10610 बौधायनदर्शपूर्णमासप्रयोगः । *Baudhayana Darsapurnamasaprayoga*

(For the use of the followers of Asvalayana)

Substance country made paper 8×4 inches Folia 60 Lines 9 on a page Extent in slokas 50 Character Nagara Date Saka 1 -8 Appearance discoloured Complete

*Colophon* —इत्याश्वलायनयजमानोपयोगि(गी)बौधायनदर्शपूर्णमास- प्रयोग समाप्त ।

*Post Col* —श्रीदुर्गायै नम ॥

शक १७२८ क्षयमवत्सरे भाद्रपदवद्य ८ रविवासरे तद्दिने गण- पतिदैवज्ञस्य सूनु राजारामजोशीसिके करेण लिखित ॥ स्वार्थं परोपकारार्थं च ॥

*Beginning* :—श्रीगणेशाय नमः ॥

अथ दर्शपूर्णमासे (?) पौर्णमास्या उक्तान्वाधानदिने यजमानः प्रातरग्निहोत्रं कृत्वा केशश्मश्रुलोमनखानि वापयित्वा सपत्नीकः स्नात्वा कृतनवनीताभ्यञ्जनः कृताञ्जलिरेकविंशतिदर्भपिञ्जूलैः वपनं कुर्यात् । पत्न्यपि वपनाभ्यञ्जनवर्ज्जं सर्वं कुर्यात् । etc., etc.

## 730.

·11231. **दर्शपूर्णमासप्रयोगः ।** *Darśa Pūrṇamāsaprayoga*

*Being intended for the follower of Baudhāyana*

Substance, country-made paper 10 × 4½ inches Folia, 13, Lines, 9 on a page Extent in Ślokas, 750 Character, Nāgara of the nineteenth century Appearance, fresh Complete

*Beginning* :—

अहितामिरन्वाधानदिने प्रातरग्निहोत्रं कृत्वा श्मश्रूपपक्षकेश-नखलोमानि वापयित्वा स्नातः नवनीताभ्यञ्जनांजनो हतवासाः स्नातैः पत्न्यध्वर्य्वादिभिः सह प्रत्येकं सप्तभिः सप्तभिर्दर्भपिञ्जूलैर्मुखं नाभिं गुल्फौ च संमृज्य दर्भान् समुच्चित्य प्रोद्योदङ् निरस्यति ॥ तत्पवनं । आपोहिष्ठेति तिसृभिस्त्रिरपः पिबेत् व्याहृतिभिर्मुख-मुन्मृजेत् ॥ एतद्दाचि परीतं तन्मन्त्राचमनम् ॥ etc., etc.

*The end of the MS.* :—ततोऽमार्चनादि ब्राह्मणतर्पणान्तं कुर्यात् । सन्तिष्ठते दर्शपूर्णमासप्रयोगः ।

सिगिर्पतिं खोतमान अधि अन्धचेम ॥ श्रीलक्ष्मीव्यङ्कटेशविजया दुर्गार्पणमस्तु ॥

श्रीरस्तु पौर्णमासीयागः प्रतिपदः कर्त्तव्यः ॥

यजमान ॥ अध्वर्यु ॥ आग्नीध्र ॥ ब्रह्मा ॥ होता ॥ श्रीराम० ॥

बौधायनोपयोगो दर्शपूर्णमासप्रयोगः समाप्तः ॥

## 731.

28. **अग्न्याधाननिरूपणम् ।** *Agnyādhānanirūpaṇa.*

The present MS is noticed in L. 758.

At the right-hand upper corner of every leaf the letters

बौ. था are written Which abbreviate बौधायन आधान. But they may also abbreviate बोधायन आग्रयण and there are descriptions of Āgrayana ceremonies also at the end. This treats both आधान and आग्रयण as in Baudh. II

## 732.

92. आधानप्रयोगः or आधानबौधायनः। *Ādhyāna-prayoga or Ādhāna-Baudhāyana*

*This manuscript is noticed in L 833*

*Post Col Statement* —

संवत् १८८६ शाके १७३१ चैत्रशुक्लपक्षे तिथौ ८ बुधवासरे इद पुस्तकं लख्यम् मनोहरदीक्षित चोयरी श्रीमोदिकरस्य इद पुस्तकम्। तैलाद्रक्षेदित्यादि।

It is a Śrauta ceremony, which has nothing to do with "the Sacred Household Fire" as supposed by Rajendralāla It refers to Pr II of the Baudhāyana Śrauta sūttra

## 733

1905. पुनराधेयप्रयोगः (बौधायनीयः)। *Punaradheya prayoga*

For the manuscript and the work see L. 4178. The Col says it belongs to Baudhāyana Sūttra

Punarādheya is dealt with in the third praśna of Baudhāyana.

## 734.

2346 आपूर्व्विकविधिः। *Apūrvikavidhi.*

For the manuscript see L 1051 which describes it under the above title

The beginning quoted in L 4051 is that portion of the Baudhāyana Kalpa Sūttra, which treats of Darvihoma. It ends in 2B, with the following words —

नात्वा घृतस्य धारयामौ सराधनि यजे स्वाहा। सराधन्यै देव्यै

स्वाहा प्रसाधन्यै देव्यै स्वाहा भूः स्वाहा भुवः स्वाहा सुवः स्वाहा भूर्भुवः सः स्वाहेति एतावत् सर्व्वदर्व्वीहोमानामेष कल्पः ॥ ५ ॥

These two leaves have the letters बौ. सू in their left-hand upper corner.

Then begins a series of Kārikās on the above

*The beginning of the kārikās in 2A :—*

राम ॥ अथ प्रकृतयस्तासु (?) दर्व्विहोमेषु सर्व्वशः ।
आघारवज्जिह्मवत् सुपचेयत्वमिति श्रुतिः ॥
तासा प्रयोग आदौ तु स्नातागत्याहृताम्बरः ।
आत्मानं दर्भपिञ्जूलैः पावयेत् सप्तकैस्त्रिभिः ॥

5B. इत्याघारप्रकृतिरष्टमोऽध्यायः ।

5B. अथापरश्चमिद्धर्थ (र्थं) पर्य्युत्स्यास्तीर्य्य दर्भकैः ।
आज्यस्थाली स्रुवं चैव स्रुचं च समिधं तथा ।
प्रोक्षणी वर्हिषश्चेति कूर्चं पात्राणि सादयेत् ॥

For the end of Āpūrvavidhi see L 4051, referred to above.

6B. इत्यापूर्व्विकविधिः समाप्तः । (See our Catal. No. 793.) After this there are 8 lines describing the size and the measure of Darvi.

इति होमदर्व्वीप्रमाणमिति ह स्माह बौधायनः ।

## 735.

1901. **पशुबन्धप्रयोगः ।** *Paśubandhaprayoga.*

A treatise on animal sacrifices.

For the manuscript and the work see L 4177.

See CS. No. 288 and W 1452, where it is called Nirudha Pasubandha prayoga. In Weber 1452 it is said to belong to Baudhāyana's School. The subject is dealt with in P. IV of Baudhāyana

The use of the parts of the sacrificed animal is stated below :—

